अहो ते धिषणाहीना, ये स्मरस्य वशं गताः ।
कृत्वा कल्मषमात्मानं, पातयन्ति भवार्णवे ॥१००॥
स्मरेणातीवरौद्रेण, नरकावर्त्तपातिना ।
अहो खलीकृतो लोको, धर्मामृतपराङ्खः ॥१०१
मु
स्मरेण स्मरणादेव, वैरं दैवनियोगतः ।
हृदये निहितं शल्यं, प्राणिनां तापकारकम् ॥१०२॥
तस्मात्कुरुत सद्वृत्तं, जिनमार्गरताः सदा ।
येन तत्खण्डशो याति, स्मरशल्यं सुदुर्धरम् ॥१०३॥
चित्तसंदूषणः कामस्तथा सद्गतिनाशनः ।
सद्वृत्तध्वंसनश्चासौ, कामोऽनर्थपरंपरा ॥१०४॥
दोषाणामाकरः कामो, गुणानां च विनाशकृत् ।
पापस्य च निजो वन्धु--रापदां चैव सङ्गमः ॥१०५॥
पिशाचेनैव कामेन, छिद्रितं सकलं जगत् ।
वंभ्रमीति परायत्तं, भवाब्धौ तन्निरन्तरम् ॥१०६॥
वैराग्य भावनामन्त्रै--स्तन्निवार्य महाबलम् ।
स्वच्छन्दवृत्तयो धीराः, सिद्धिसौख्यं प्रपेदिरे ॥१०७॥
कामो त्यजति सद्वृत्तं, गुरोर्वाणीन्द्रियं तथा ।
गुणानां समुदायं च, चेतःस्वास्थ्यं तथैव च ॥१०८॥
तस्मात्कामः सदा हेयो, मोक्षसौख्यं जिघृक्षुभिः ।
संसारं च परित्यक्तुं, वाञ्छद्भिर्यतिसत्तमैः ॥१०९॥

कामार्थौ वैरिणौ नित्यं, विशुद्धध्यानरोधिनौ ।
संत्यजतां महाक्रूरौ, सुखं संजायते नृणाम् ॥११०॥
कामदाहो वरं सोढुं, न तु शीलस्य खण्डनम् ।
शीलखण्डनशीलानां, नरके पतनं ध्रुवम् ॥१११॥
कामदाहः सदा नैव, स्वल्पकालेन शाम्यति ।
सेवनाच्च महत्पापं, नरकावर्त्तपातनम् ॥११२॥
सुतीव्रेणापि कामेन, स्वल्पकालं तु वेदनाः ।
खण्डनेन तु शीलस्य, भवकोटिषु वेदनाः ॥११३॥
नियतं प्रशमं याति, कामदाहः सुदारुणः ।
ज्ञानोपयोगसामर्थ्या-द्विषं मन्त्रपदैर्यथा ॥११४॥
असेवनमनङ्गस्य, शमाय परमं स्मृतम् ।
सेवनाच्च परावृद्धिः, शमस्तु न कदाचन ॥११५॥
उपवासोऽवमौदर्य-रसानां त्यजनं तथा ।
स्नानस्यासेवनं चैव, ताम्बूलस्य च वर्जनम् ॥११६॥
असेवेच्छा निरोधस्तु, निरनुस्मरणं तथा ।
एते हि निर्जनोपाया, मदनस्य महारिपोः ॥११७॥
काममिच्छानिरोधेन, क्रोधं च क्षमया भृशम् ।
जयेन्मानं मृदुत्वेन, मोहं संज्ञानसेवया ॥११८॥
तस्मिन्नुपशमे प्राप्ते, युक्तं सद्वृत्तधारणम् ।
तृष्णां सुदूरतस्त्यक्त्वा, विपाकमिव भोजनम् ॥११९॥

कर्मणां शोधनं श्रेष्ठं, ब्रह्मचर्यं सुरक्षितम्।
सारभूतं चरित्रस्य, देवैरपि सुपूजितम् ॥१२०॥

या चैषा प्रमदा भाति, लावण्यजलवाहिनी।
सैषा वैतरणी घोरा, दुःखोर्मिशताकुला[1] ॥१२१॥

संसारस्य च बीजानि, दुःखानां राशयः पराः।
पापस्य च निधानानि, निर्मिताः केन योषितः ॥१२२॥

इयं सा मदनज्वाला, व रेवं समद्भुता।
नराणां यत्र ह्रियन्ते, यौवनानि धनानि च ॥१२३॥

नरकावर्त्तपातिन्यः, स्वर्गमार्गदृढार्गलाः।
अनर्थानां विधायिन्यो, योषितः केन निर्मिताः ॥१२४॥

कृमिजालशताकीर्णे, दुर्गंधमलपूरिते।
त्वग्मात्रसंवृते स्त्रीणां, का काये रमणीयता? ॥१२५॥

अहो ते सुखतां प्राप्ता, ये काममलवर्जिताः।
सद्वृत्तं विधिनाऽऽपाल्य, यास्यन्ति पदमुत्तमम् ॥१२६॥

भोगार्थी यः करोत्यज्ञो, निदानं मोहसङ्गतः।
चूर्णीकरोत्यसौ रत्नं, अनर्घ्यं सूत्रहेतुना ॥१२७॥

भवभोगशरीरेषु, भावनीयः सदा बुधैः।
निर्वेदः परया बुद्ध्या, कर्मारातिजिघृक्षुभिः ॥१२८॥

---

१ शतसंकुला. ( इति समीचीनम्. )

यावन्न मृत्युवज्रेण, देहशैलो निपात्यते ।
नियुज्यतां मनस्तावत्कर्मारातिपरिक्षये ॥१२९॥

त्यज कामार्थयोः सङ्गं, धर्मध्यानं सदा भज ।
छिन्धि स्नेहमयान्पाशान्मानुष्यं प्राप्य दुर्लभम् ॥१३०॥

कथं ते भ्रष्टसद्वृत्ता, विषयानुपसेवते[१] ।
पंचतान्तरिता येषां, नरके तीव्रवेदना ॥१३१॥

सद्वृत्ताद्भ्रष्टचित्तानां, विषयासङ्गसङ्गिनाम् ।
तेषामेवेह दुःखानि, भवन्ति नरकेषु च ॥१३२॥

विषयास्वादलुब्धेन, रागद्वेषवशात्मना ।
आत्मा सुवञ्चितस्तेन, यः स(श)मं नापि सेवते॥१३३॥

आत्मना यत्कृतं कर्म, भोक्तव्यं तदनेकधा ।
तस्मात्कर्माश्रवं रुद्ध्वा, स्वेन्द्रियाणि वशं नयेत्॥१३४॥

इन्द्रियप्रसरं रुद्ध्वा, स्वात्मानं वशमानयेत् ।
येन निर्वाणसौख्यस्य, भाजनत्वं प्रपत्स्यसे ॥१३५॥

संपन्नेष्वपि भोगेषु, महतां नास्ति गृद्धिता ।
अन्येषां गृद्धिरेवास्ति, शमस्तु न कदाचन ॥१३६॥

षट्खण्डाधिपतिश्चक्री, परित्यज्य वसुंधराम् ।
तृणवत्सर्वभोगांश्च, दीक्षां दैगंबरीं स्थितः ॥१३७॥

---

१ नुपभुञ्जते. (इति समीचीनम.)

कृमितुल्यैः किमस्माभिर्भोक्तव्यं वस्तुसुंदरम् ।
येनात्र गृहपङ्केषु, सीदामः किमनर्थकम्?   ॥१३८॥
येन ते जनितं दुःखं, भवांभोधौ सुदुस्तरम् ।
तं कर्मारातिमत्युग्रं, विजेतुं किं न वाञ्छसि?॥१३९॥
अब्रह्मचारिणो नित्यं, मांसभक्षणतत्पराः ।
शुचित्वं तेऽपि मन्यन्ते, किन्तु चित्रमतः परम्॥१४०॥
येन संक्षीयते कर्म, संचयश्च न जायते ।
तदेवात्मविदा कार्यं, मोक्षसौख्याभिलाषिणा॥१४१॥
अनेकशस्त्वया प्राप्ता, विविधा भोगसंपदः ।
अप्सरोगणसंकीर्णे, दिवि देवविराजिते   ॥१४२॥
पुनश्च नरके रौद्रे, रौरवेऽत्यन्तभीतिदे ।
नानाप्रकारदुःखौघैः, संस्थितोऽसि विधेर्वशात्॥१४३॥
तप्ततैलकभल्लीषु, पच्यमानेन यत् त्वया ।
संप्राप्तं परमं दुःखं, तं वक्तुं नैव पार्यते   ॥१४४॥
नानायन्त्रेषु रौद्रेषु, पीड्यमानेन वह्निना ।
दुःसहा वेदना प्राप्ता, पूर्वकर्मनियोगतः   ॥१४५॥
विण्मूत्रपूरिते भीमे, पूतिश्लेष्मावसाकुले ।
भूयो गर्भगृहे मातुर्दैवाद्यातोऽसि संस्थितिम् ॥१४६॥
तिर्यग्गतौ च यद्दुःखं, प्राप्तं छेदनभेदनैः ।
न शक्तस्तत्पुमान्वक्तुं, जिह्वाकोटिशतैरपि ॥१४७॥

संसृतौ नास्ति तत्सौख्यं, यन्न प्राप्तमनेकधा ।
देवमानवतिर्यक्षु, भ्रमता जन्तुनानिशम् ॥१४८॥
चतुर्गतिनिबन्धेऽस्मिन्-संसारेऽत्यन्तभातिदे ।
सुखदुःखान्यवाप्तानि, भ्रमताविधियोगतः ॥१४९॥
एवं चिरमिदं कष्टं, ज्ञात्वात्यन्तविनश्वरम् ।
कथं न यासि वैराग्यं ? धिगस्तु तव जीवितम् ॥१५०॥
जीवितं विद्युता तुल्यं, संयोगाः स्वप्नसंनिभाः ।
संध्यारागसमः स्नेहः, शरीरं तृणविन्दुवत् ॥१५१॥
शक्रचापसमा भोगाः, संपदो जलदोपमाः ।
यौवनं जलरेखेव, सर्वमेतदशाश्वतम् ॥१५२॥
समानवयसो दृष्टा, मृत्युना स्ववशीकृताः ।
कथं चेतः स(श)मो नास्ति,मनागपि हितात्मनः॥१५३॥
सर्वाशुचिमये काये, नश्वरे व्याधिपीडिते ।
को हि विद्वान्रतिं गच्छेद्यस्यास्ति श्रुतसङ्गमः ॥१५४॥
चिरं सुपोपितः कायो, भोजनाच्छादनादिभिः ।
विकृतिं याति सोऽप्यन्ते,कास्था वाह्येषु वस्तुषु ॥१५५॥
नायातो वंधुभिः सार्धं, न गतो वन्धुभिः समम् ।
वृथैव स्वजनैः स्नेहो, जनानां मूढचेतसाम् ॥१५६॥
जातेनावश्य मर्तव्यं, प्राणिना प्राणधारिणा ।
अतः कुरुत मा शोकं, मृते वन्धुजने वुधाः ॥१५७॥

आत्मकार्यं परित्यज्य, परकार्येषु यो रतः ।
ममत्वरतचेतस्कः, स्वहितात् भ्रंस(श)मेष्यति॥१५८॥
स्वहितं तु भवेद् ज्ञानं, चारित्रं दर्शनं तथा ।
तपःसंरक्षणं चैव, सर्वविद्भिस्तदुच्यते ॥१५९॥
सुखसंभोगसन्मूढा, विषयास्वादलंपटाः ।
स्वहितात् भ्रंस(श)मागत्य, गृहवासं सिषेविरे ॥१६०॥
वियोगा वहवो दृष्टा, द्रव्याणां च परिक्षयः ।
तथापि निर्घृणं चेतः सुखास्वादनलंपटम् ॥१६१॥
यथा च जायते चेतः सम्यक् शुद्धिं सुनिर्मलाम् ।
तथा ज्ञानविदा कार्यं, प्रयत्नेनापि भूरिणा ॥१६२॥
विशुद्धं मानसं यस्य, रागादिमलवर्जितम् ।
संसारमफलं तस्य, सकलं समुपस्थितम् ॥१६३॥
संसारध्वंसने हृष्टिं, धृतिमिन्द्रियनिग्रहे ।
कषायविजये यत्नं, नाभव्यो लब्धुमर्हति ॥१६४॥
एतदेव परं ब्रह्म, न विदन्तीह मोहिनः ।
यदेतच्चित्तनैर्मल्यं, रागद्वेषादिवर्जनम् ॥१६५॥
तथा तुष्टे यमे तद्धि, पण्डितेन हितैषिणा ।
यथा न विक्रियां याति, मनोऽत्यर्थं विपत्स्वपि॥१६६॥
धन्यास्ते मानवा लोके, ये प्राप्ताप्यापदां पराम् ।
विकृतिं नैव गच्छन्ति, यतस्ते साधुमानसः ॥१६७॥

संक्लेशो नहि कर्तव्यः, संक्लेशो बन्धकारणम् ।
संक्लेशपरिणामेन, जीवो दुःखस्य भाजनम् ॥१६८॥
संक्लेशपरिणामेन, जीवः प्राप्नोति भूरिशः ।
सुमहत्कर्मसंबंधं, भवकोटिषु दुःखदम् ॥१६९॥
चित्तरत्नमसंक्लिष्टं, महतामुत्तमं धनम् ।
येन संप्राप्यते स्थानं, जरामरणवर्जितम् ॥१७०॥
संपत्तौ विस्मिता नैव, विपत्तौ नैव दुःखिताः ।
महतां लक्षणं ह्येतत्, तनु द्रव्यसमागमः ॥१७१॥
आपत्सु संपतन्तीषु, पूर्वकर्मनियोगतः ।
धैर्यमेव परं त्राणं, न युक्तमनुशोचनम् ॥१७२॥
विशुद्धपरिणामेन, शान्तिर्भवति सर्वतः ।
संक्लिष्टेन तु चित्तेन, नास्ति शान्तिर्भवेष्वपि ॥१७३॥
संक्लिष्टचेतसां पुंसा—मायात्संसारवर्धनम् ।
विशुद्धा चेतसो वृत्तिः, संपन्निर्वृतिदायिनी ॥१७४॥
यदा चित्तविशुद्धिः स्या-दापदः संपदस्तदा ।
समास्तत्त्वविदां पुंसां, सर्वं हि महतां महत् ॥१७५॥
परोऽप्युत्पथमापन्नो, निषेद्धुं युक्त एव सः ।
किं पुनः स्वमनोऽत्यर्थं, विषयोत्पथयायि यत् ॥१७६॥
अज्ञानाद्यदि वा मोहात्, यत्कृतं कर्म कुत्सितम् ।
व्यावर्तयेन्मनस्तस्मात्, पुनस्तन्न समाचरेत् ॥१७७॥

अचिरेणैव कालेन, फलं प्राप्स्यसि दुर्मते।
विपाकेऽतीवतिक्तस्य, कर्मणो यत् त्वया कृतम् ॥१७८॥
स्वल्पेनैव तु कालेन, फलं प्राप्स्यसि यत्कृतम्।
शशवदात्मकर्णाभ्यां, गोपयत् स्वं मनागपि ॥१७९॥
वर्धमानं हि तत्कर्म–अज्ञानाद्यो न शोधयेत्।
सुप्रभूतर्णसंग्रस्तः, स पश्चात्परितप्यते ॥१८०॥
सुखभावकृते मूढाः, किं न कुर्वन्ति मानवाः।
ये न संतापमायान्ति, जन्मकोटिशतेष्वपि ॥१८१॥
परं च वञ्चयामीति, ये हि मायां प्रयुञ्जते।
इहान्यत्र च लोके वै, तैरात्मा वञ्चितः सदा ॥१८२॥
पंचतासन्नतां प्राप्ता, न कृतं सुकृतार्जनम्।
सुमानुष्ये हि संप्राप्ते, हा गतं जन्म निष्फलम् ॥१८३॥
कर्मपाशविमोक्षाय, यत्नो यस्य न देहिनः।
स संसारमहागुप्तौ, बद्धः संतिष्ठते सदा ॥१८४॥
गृहचारकवासेऽस्मि–न्विषयामिषलोभितः।
सीदन्ति नरशार्दूला, बद्धा बान्धवबन्धनैः ॥१८५॥
गर्भवासेऽपि यद्दुःखं, प्राप्तमत्रैव जन्मनि।
अधुना विस्मृतं किं ते? येनात्मानं न बुध्यसे ॥१८६॥
चतुरशीतिलक्षेषु, योनीनां भ्रमता त्वया।
प्राप्तानि दुःखशल्यानि, नानाकाराणि मोहिना ॥१८७

कथं नोद्विजसे मूढ ? दुःखात्संसृतिसंभवात् ।
येन त्वं विषयासक्तो, लोभेनास्मिन् वशीकृतः ॥१८८॥

यत्त्वयोपार्जितं कर्म, भवकोटिषु पुष्कलम् ।
तच्छेत्तुं चेन्न शक्नोषि, गतं ते जन्म निष्फलम् ॥१८९॥

अज्ञानी क्षपयेत् कर्म, यज्जन्मशतकोटिभिः ।
तद् ज्ञानी तु त्रिगुप्तो, निहन्त्यन्तर्मुहूर्ततः ॥१९०॥

जीवितेनापि किं तेन ? कृता यत्र न निर्जरा ।
कर्मणां संवरो वापि, संसारासारकारिणाम् ॥१९१॥

स जातो येन जातेन, सुकृता पक्वपाचना ।
कर्मणां पाकघोराणां, विबुधेन महात्मना ॥१९२॥

रोषे रोषं परं कृत्वा, माने मानं विधाय च ।
सङ्गे सङ्गं परित्यज्य, स्वात्माधीनं सुखं कुरु ॥१९३॥

परिग्रहे महाद्वेषो, मुक्तौ च रति रुत्तमा ।
सद्ध्याने चित्तमेकाग्रं, रौद्रार्ते नैव संस्थितम् ॥१९४॥

धर्मस्य संचये यत्नं, कर्मणां च परिक्षये ।
साधूनां चेष्टिते चित्तं, सर्वदा पापनाशनम् ॥१९५॥

मानस्तंभं दृढं भङ्क्त्वा, लोभाद्रिं प्रविदार्य वै ।
मायावल्लिं समुत्पाट्य, क्रोधशत्रुं निहत्य च ॥१९६॥

यथाख्यातं हितं प्राप्य, चारित्रं ध्यानतत्पराः ।
कर्मणां प्रक्षयं कृत्वा, प्रयाताः परमं पदम् ॥१९७॥

सङ्गादिरहिता धीरा, रागादिमलवर्जिताः ।
शान्ता दान्ता तपोभूषा, मुक्तिकाङ्क्षणतत्पराः ॥१९८॥
धृतिभावनया युक्ताः, सत्यभावनयान्विताः ।
तत्त्वार्थी हितचेतस्कास्ते पात्रं दातुमुत्तमाः ॥१९९॥
धृतिभावनया दुःखं, सत्त्वभावनया भयम् ।
ज्ञानभावनया कर्म, नाशयन्ति न संशयः ॥२००॥
आग्रहो हि स(श) मे येषां, विग्रहं कर्मशत्रुभिः ।
विषयेषु निरासङ्गास्ते पात्रं यातउत्तमाः ॥२०१॥
निःसङ्गिनोऽपि वृत्ताढ्या, निःस्नेहास्तु श्रुतिप्रियाः ।
अभूषापि तपोभूषा–स्ते पात्रं योगिनः सदा ॥२०२॥
यैर्ममत्वं सदा त्यक्तं, स्वकायेऽपि मनीषिभिः ।
ते पात्रं संयतात्मानः, सर्वसत्त्वहिते रताः ॥२०३॥
परिषहजये शक्तं, शक्तं कर्मपरिक्षये ।
ज्ञानध्यानतपोभूषं, शुद्धाचारपरायणम् ॥२०४॥
प्रशान्तमानसं सौम्यं, प्रशान्तकरणं शुभम् ।
प्रशान्तारिमहामोहं, कामक्रोधनिसूदनम् ॥२०५॥
निंदास्तुतिसमं धीरं, शरीरेऽपि च निःस्पृहम् ।
जितेन्द्रियं जितक्रोधं, जितलोभमहाभटम् ॥२०६॥
रागद्वेषविनिर्मुक्तं, सिद्धिसंङ्गमनोत्सुकम् ।
ज्ञानाभ्यासरतं नित्यं, नित्यं च प्रशमे स्थितम् ॥२०७॥
एवं विधं हि यो दृष्ट्वा, स्वगृहाङ्गणमागतम् ।
मात्सर्यं कुरुते मोहात्क्रिया तस्य न विद्यते ॥२०८॥

मायां निरासिकां कृत्वा, तृष्णां च परमौजसः।
रागद्वेषौ समुत्सार्य, प्रयाताः पदमक्षयम् ॥२०९॥
धीराणां यतयो धीरा, ये निराकुलचेतसः।
कर्मशत्रुमहासैन्यं, निर्जयन्ति तपोबलात् ॥२१०॥
परीषहजये शूराः, शूराश्चेन्द्रियनिग्रहे।
कषायविजये शूरास्ते शूरा गदिता बुधैः ॥२११॥
नादत्तेऽभिनवं कर्म, स्वचारित्रनिविष्टधीः।
पुराणं निर्जयेद् बाढं, विशुद्धध्यानसङ्गतः ॥२१२॥
संसारवासनिर्वृत्ताः, शिवसौख्यसमुत्सुकाः।
सद्भिस्ते गदिताः प्राज्ञाः,शेषाः स्वार्थस्य वाचकाः॥२१३॥
समतां सर्वभूतेषु, यः करोति सुमानसः।
ममत्वभावनिर्मुक्तो, यात्यसौ पदमव्ययम् ॥२१४॥
इन्द्रियाणां जये शूरः कर्मबंधे च कातरः।
तत्त्वार्थो हितचेतस्कः स्वशरीरेऽपि निस्पृहः ॥२१५॥
परीषहमहाराति-बलनिर्दलनक्षमः।
कषायविजये शूरः स शूर इति कथ्यते ॥२१६॥
संसारध्वंसिनीं चर्यां, ये कुर्वन्ति सदा नराः।
रागद्वेषहतिं कृत्वा, ते यान्ति परमां गतिम् ॥२१७॥
मलैस्तु रहिता धीरा, मलदिग्धाङ्गयष्टयः।
ते ब्रह्मचारिणो नित्यं, ज्ञानाभ्यासं सिषेविरे ॥२१८॥

ज्ञानभावनया शक्ता--निभृतैरन्तरात्मना ।
अप्रमत्तगुणं प्राप्य, लभन्ते हितमात्मनः ॥२१९॥
संसारवासभीरूणां, त्यक्तान्तर्बाह्यसङ्गिनाम् ।
विषयेभ्यो निवृत्तानां, श्लाघ्यं तेषां हि जीवितम्॥२२०॥
समं शत्रौ च मित्रे च, समं मानापमानयोः ।
लाभालाभे समं नित्यं, लोष्टकाञ्चनयोस्तथा ॥२२१॥
सम्यक्त्वभावनाशुद्धं, ज्ञानसेवापरायणम् ।
चारित्रचरणासक्तं, अक्षीणसुखकाङ्क्षिणम् ॥२२२॥
ईदृशं श्रमणं दृष्ट्वा, योऽवमन्येत दुष्टधीः ।
नृजन्मनः फलं सारं, स हारयति सर्वथा ॥२२३॥
रागादिवर्धनं सङ्गं, परित्यज्य दृढव्रताः ।
धीरा निर्मलचेतस्कास्तपस्यन्ति महाधियः ॥२२४॥
संसारोद्विग्नचित्तानां, निःश्रेयससुखैषिणां ।
सर्वसङ्गनिवृत्तानां, धन्यं तेषां हि जीवितम् ॥२२५॥
सप्तभीस्थानमुक्तानां, यत्रास्तमितशायिनाम् ।
त्रिकालयोगयुक्तानां, जीवितं सफलं भवेत् ॥२२६॥
आर्तरौद्रपरित्यागात्, धर्मशुक्लसमाश्रयात् ।
जीवः प्राप्नोति निर्वाणं, अनन्तसुखमच्युतम् ॥२२७॥
आत्मानं विनियम्याशु, विषयेषु पराङ्मुखः ।
साधयेत्स्वहितं प्राज्ञो, ज्ञानाभ्यासरतो यतिः ॥२२८॥

यथा सङ्ग परित्यागस्तथा कर्मविमोचनम् ।
यथा च कर्मणां छेदस्तथाऽऽसन्नं परं पदम् ॥२२९॥

यत्परित्यज्य गन्तव्यं, तत्स्वकीयं कथं भवेत् ।
इत्यालोच्य शरीरेऽपि, विद्वानाशां परित्यजेत् ॥२३०॥

नूनं नात्मा प्रियस्तेषां, ये रताः सङ्गसङ्ग्रहे ।
सन्नासीन्नापकृत्तुच्छः, स्वीकर्तुं नैव शक्यते ॥२३१॥

शरीरमात्रसङ्गेन, भवेदारम्भवर्धनम् ।
तदशाश्वतमत्राणं, तस्मिन्विद्वान् रतिं त्यजेत् ॥२३२॥

सङ्गात्संजायते गृद्धि-र्गृद्धो वाञ्छति सञ्चयम् ।
सञ्चयाद्वर्धते लोभो, लोभात्संसृतिवर्धनम् ॥२३३॥

ममत्वाज्जायते लोभो, लोभाद्रागश्च जायते ।
रागाच्च जायते द्वेषो, द्वेषाद्दुःखपरंपरा ॥२३४॥

निर्ममत्वं परं तत्त्वं, निर्ममत्वं परं सुखम् ।
निर्ममत्वं परं वीजं, मोक्षस्य कथितं वुधैः ॥२३५॥

निर्ममत्वे सदा सौख्यं, संसारस्थितिभेदनम् ।
जायते परमोत्कृष्टमात्मनः संस्थिते सति ॥२३६॥

अर्थो मूलमनर्थानां, अर्थो निर्वृतिनाशनम् ।
कपायोत्पादकश्चार्थो, दुःखाणां च विधायकः ॥२३७॥

प्राप्तोज्झितानि वित्तानि, त्वया सर्वाणि संसृतौ ।
पुनस्तेपु रतिः कष्टं, भुक्तवान्त इवौदने ॥२३८॥

को वा वित्तं समादाय, परलोकं गतः पुमान् ।
येन तृष्णाग्निसंतप्तः, कर्म बध्नाति दारुणम् ॥२३९॥
तृष्णान्धा नैव पश्यन्ति, हितं वा यदि वाहितम् ।
संतोषाञ्जनमासाद्य, पश्यन्ति सुधियो जनाः ॥२४०॥
संतोषसारसद्रत्नं, समादाय विचक्षणाः ।
भवन्ति सुखिनो नित्यं, मोक्षसन्मार्गवर्त्तिनः ॥२४१॥
तृष्णानलप्रदीप्तानां, सत्सौख्यं तु कुतो नृणाम् ?।
दुःखमेव सदा तेषां, ये रता धनसञ्चये ॥२४२॥
संतुष्टाः सुखिनो नित्यं, असंतुष्टाः सुदुःखिताः ।
उभयोरन्तरं ज्ञात्वा, संतोषे क्रियतां रतिः ॥२४३॥
द्रव्याशां दूरतस्त्यक्त्वा, संतोषं कुरु सन्मते ।
मा पुनर्दीर्घसंसारे, पर्यटिष्यसि निश्चितम् ॥२४४॥
ईश्वरो नाम संतोषी, यो न प्रार्थयते परम् ।
प्रार्थना महतामत्र, परं दारिद्र्यकारणम् ॥२४५॥
हृदयं दह्यतेऽत्यर्थं, तृष्णाग्निपरितापितम् ।
न शक्यं शमनं कर्तुं, विना संतोषवारिणा ॥२४६॥
यैः संतोषोदकं पीत्वा, निर्ममत्वेन वासितम् ।
त्यक्तं तैर्मानसं दुःखं, दुर्जनेनेव सौहृदं ॥२४७॥
यैः संतोषामृतं पीतं, तृष्णातृडपनाशनम् ।
तैः सुनिर्वाणसौख्यस्य, कारणं समुपार्जितम् ॥२४८॥

संतोषं लोभनाशाय, धृतिं वासुखशान्तये।
ज्ञानं च तपसो वृद्धौ, धारयन्ति दिगम्बराः ॥२४९॥
ज्ञानदर्शनसंपन्न, आत्मा वैको ध्रुवो मम ।
शेषा भावाश्च मे बाह्याः, सर्वे संयोगलक्षणाः॥२५०॥
संयोगमूलजीवेन, प्राप्ता दुःखपरंपरा ।
तस्मात्संयोगसंबंधं, त्रिविधेन परित्यजेत् ॥२५१॥
ये हि जीवादयो भावाः, सर्वज्ञैः भाषिताः पुरा।
अन्यथा च क्रियास्तेषां, चिन्ता तत्र निरर्थका ॥२५२॥
यथा च कुरुते जन्तु-र्ममत्वं विपरीतधीः ।
तथा हि बन्धमायान्ति, कर्माण्यस्य समंततः ॥२५३॥
अज्ञानावृत्तचित्तानां, रागद्वेषवशात्मनां।
आरंभेषु प्रवृत्तानां, हितं नश्यति भीतवत् ॥२५४॥
परिग्रह परिष्वङ्गा-द्रागो द्वेषश्च जायते ।
रागद्वेषौ महाबन्धः, कर्मणां भवकारिणाम् ॥२५५॥
सर्वसङ्गान् पशून् कृत्वा, ध्यानाग्निनाऽऽहुतिं क्षिपेत्।
कर्माणि समिधश्चैव, यागोऽयं सुमहाफलम् ॥२५६॥
राजसूयसहस्राणि, अश्वमेधशतानि च।
अनन्तभागतुल्यानि, न स्युस्तेन कदाचन ॥२५७॥
सा प्रज्ञा या स (श) मे याति, विनियोगपराहता ।
शेषा निरयदा प्रज्ञा, कर्मोपार्जनकारिणी ॥२५८॥

प्रज्ञाङ्गना सदा सेव्या, पुरुषेण सुखावहा ।
हेयोपादेयतत्त्वज्ञा, या रता शमकर्मणि ॥२५९॥
दयाङ्गना च सा सेव्या, सर्वकामफलप्रदा ।
सेवितासौ करोत्याशु, मानसं करुणात्मकम् ॥२६०॥
मैत्र्यङ्गना सदोपास्या, हृदयानन्दकारिणा ।
या विधत्ते कृतोपास्ति–चित्तं विद्वेषवर्जितम् ॥२६१॥
सर्वसत्त्वे दया मैत्री, यः करोति सुमानसः ।
जयत्यसावरीन् सर्वान्, वाह्याभ्यन्तरसंस्थितान् ॥२६२॥
स (श) मे नयति भूतानि, यः शक्तो देशनाविधौ ।
कालादिलब्धियुक्तस्य, प्रत्यहं तस्य निर्जरा ॥२६३॥
शमो हि न भवेद्येषां, ते नराः पशुसंनिभाः ।
समृद्धा अपि सच्छास्त्रे, कामार्था रतिसङ्गिनः॥२६४॥
कर्मणां ध्वंसने चित्तं, रागं मोहारिनाशने ।
द्वेषं कषायवर्गे च, नायोग्यो लब्धुमर्हति ॥२६५॥
चित्रं नरकतिर्यक्षु, भ्रमतोऽपि निरन्तरम् ।
यतोस्तु विद्यते नैव, स (श)मो दुरितबन्धिनः ॥२६६॥
मनस्याह्लादिनी सेव्या, सर्वकालं सुखप्रदा ।
उपनेया त्वया भद्र, क्षमा नाम कुलाङ्गना ॥२६७॥
क्षमया क्षीयते कर्म, दुःखदं पूर्वसंचितम् ।
चित्तं च जायते शुद्धं, विद्वेषभयवर्जितम् ॥२६८॥

प्रज्ञा सूया च मैत्री च, समता करुणा क्षमा ।
सम्यक्त्वसहिता सेव्या, सिद्धिसौधसुखप्रदा ॥२६९॥
भयं या हि भवाद्भीमा–त्प्रीतिं च जिनशासने ।
शोकं पूर्वकृतात्पापात्, यदीच्छेद्धितमात्मनः ॥२७०॥
कुसंसर्गः सदा त्याज्यो, दोषाणां प्रविधायकः ।
सगुणोऽपि जनस्तेन, लघुतां याति तत्क्षणात् ॥२७१॥
सत्सङ्गो हि बुधैः कार्यः, सर्वकालसुखप्रदः ।
तेनैव गुरुतां याति, गुणहीनोऽपि मानवः ॥२७२॥
साधूनां खलसङ्गेन, चेष्टितं मलिनं भवेत् ।
सैंहिकेयात्समासक्ता,–भाभ्यो भानोरपि क्षयः ॥२७३॥
रागादयो महादोषा, खलास्ते गदिता बुधैः ।
तेषां समाश्रयस्त्याज्य-स्तत्त्वविद्भिः सदा नरैः ॥२७४॥
गुणाः सुपूजिता लोके, गुणाः कल्याणकारकाः ।
गुणहीना हि लोकेऽस्मिन्, महान्तोऽपि मलीमसाः ॥
सद्गुणैर्गुरुतां याति, कुलहीनोऽपि मानवः ।
निर्गुणः सुकुलाढ्योऽपि, लघुतां याति तत्क्षणात् ॥२७६॥
सद्वृत्तः पूज्यते देवै–राखण्डलपुरस्सरैः ।
असद्वृत्तस्तु लोकेऽस्मिन, निंद्यतेऽसौ सुतैरपि ॥२७७॥
चारित्रं तु समादाय, ये पुनर्भङ्गमागताः ।
ते साम्राज्यं परित्यज्य, दास्यभावं प्रपेदिरे ॥२७८॥

शीलसंधारिणां पुंसां, मनुष्येषु सुरेषु च।
आत्मा गौरवमायाति, परत्रेह च सन्ततम् ॥२७९॥
आपदो हि महाघोरा--स्तत्त्वसाधनसंगतैः।
निस्तीर्यंते महोत्साहैः, शीलरक्षणतत्परैः ॥२८०॥
वरं तत्क्षणतो मृत्युः, शीलसंयमधारिणाम्।
न तु सच्छीलहीनानां, कल्पान्तमपि जीवितम् ॥२८१॥
वरं शत्रुगृहे भिक्षा, याचिता शीलधारिणा।
न तु सच्छीलभङ्गेन, साम्राज्यमपि जीवितम् ॥२८२॥
धनहीनोऽपि शीलाढ्यः, पूज्यः सर्वत्र विष्टपे।
शीलहीनो धनाढ्योऽपि, न पूज्यः स्वजनेष्वपि ॥२८३॥
वरं सदैव दारिद्र्यं, शीलैश्वर्यसमन्वितम्।
न तु शीलविहीनानां, विभवाश्चक्रवर्त्तिनः ॥२८४॥
धनहीनोऽपि सद्वृत्तो, याति निर्वाणनाथताम्।
चक्रवर्त्यप्यसद्वृत्तो, याति दुःखपरंपराम् ॥२८५॥
सुखरात्रिर्भवेत्तेषां, येषां शीलं सुनिर्मलम्।
न तु सच्छीलहीनानां, दिवसोऽपि सुखावहः ॥२८६॥
देहं दहति कोपाग्नि--स्तत्क्षणं समुदीरितः।
वर्धमानः ससामग्र्यं, चिरकालं समार्जितम् ॥२८७॥
क्रोधेन वर्धते कर्म, दारुणं भववर्धनम्।
सकृच्च क्षीयते सद्य--स्तपस्स्वं समुपार्जितम् ॥२८८॥

सुदुष्टमनसा पूर्वं, यत्कर्म समुपार्जितम् ।
तस्मिन्फलप्रदेयास्ते कोऽन्येषां क्रोधमुद्वहेत् ॥२८९॥
छिद्यमाने ऋणे यद्व--च्चेतसो जायते धृतिः ।
शोध्यमाने तु कर्मणें, किं विमुक्तिर्न जायते ॥२९०॥
स्वहितं यः परित्यज्य, सयत्नं पापमाहरेत् ।
क्षमां न चेत्करोम्यस्य, मत्कृतघ्नो न विद्यते ॥२९१॥
शत्रुभावस्थितान्यस्तु, करोति वशवर्त्तिनः ।
प्रज्ञाप्रयोगसामर्थ्या-त्स शूरः स च पण्डितः ॥२९२॥
विवादो हि मनुष्याणां, धर्मकामार्थनाशकृत् ।
वैराद् वन्धजननोऽपि, नित्यं चाहितकर्मणाम् ।२९३॥
धन्यास्ते मानवा नित्यं, ये सदा क्षमया युताः ।
वञ्च्यमाना शठैर्लुब्धैर्विवादं नैव कुर्वते ॥२९४॥
वादेन वहवो नष्टा, येऽपि द्रव्यमहोत्कटाः ।
वरमर्थपरित्यागो, न विवादः खलैःसह ॥२९५॥
अहंकारो हि लोकानां, विनाशाय न वृद्धये ।
यथा विनाशकाले स्यात्, प्रदीपस्य शिखोज्ज्वला॥२९६
हीनयोनिषु विभ्रम्य, चिरकालमनेकधा ।
उच्चगोत्रे सकृत्प्राप्ते, कोऽन्यो मानं समुद्वहेत् ॥२९७॥
रागद्वेषौ महाशत्रू, मोक्षमार्गमलिम्लुचौ ।
ज्ञानध्यानतपोरत्नं, हरतः सुचिरार्जितम् ॥२९८॥

चिरं गतस्य संसारे, वहुयोनिसमाकुले ।
आप्ता सुदुर्लभा वोधिः, शासने जिनभाषिते ॥२९९॥
अधुना तां सम्प्रासाद्य, संसारच्छेदकारिणीं ।
प्रमादो नोचितः कर्तुं, निमेषमपि धीमता ॥३००॥
प्रमादं ये तु कुर्वन्ति, मूढा विषयलालसाः ।
नरकादिषु तिर्यक्षु, ते भवन्ति चिरं नराः ॥३०१॥
आत्मा यस्य वशो नास्ति, कुतस्तस्य परो जनः ।
आत्माधीनस्य शान्तस्य, त्रैलोक्यं वशवर्त्तितम्॥३०२॥
आत्माधीनं तु यत्सौख्यं, तत्सौख्यं वर्णितं बुधैः।
पराधीनं तु यत्सौख्यं, दुःखमेव न तत्सुखम्॥३०३॥
पराधीनं सुखं कष्टं, राज्ञामपि महौजसां ।
तस्मादेतत्समालोच्य, आत्मायत्तं सुखं कुरु ॥३०४॥
आत्मायत्तं सुखं लोके, परायत्तं न तत्सुखम् ।
एतत्सम्यग्विजानंतो, मुह्यन्ते मानुषाः कथम्॥३०५॥
नैःसंग्याज्जायते सौख्यं, मोक्षसाधनमुत्तमम् ।
संगाच्च जायते दुःखं, संसारस्य निबन्धनम् ॥३०६॥
पूर्वकर्मविपाकेन, वाधायां यत्तु शोचनम् ।
तदिदं तु श्वदष्टस्य, जरतुखेऽथाहिताडनम् ॥३०७॥
अज्ञे हि बाधते दुःखं, मानसं न विचक्षणे ।
पवनैर्नीयते तूलं, मेरोः शृंगं न जातुचित् ॥३०८॥

परं ज्ञानफलं वृत्तं, न विभूतिर्गरीयसी ।
तथाहि वर्धते कर्म, सद्वृत्तेन विमुच्यते ॥३०९॥

संवेगः परमं कार्यं, श्रुतस्य गदितं बुधैः ।
तस्माद् ये धनमिच्छन्ति, ते त्विच्छंत्यमृताद्विषम् ॥३१०

श्रुतं वृत्तं स(श)मो येषां, धनं परमदुर्लभम् ।
ते नरा धनिनः प्रोक्ताः, शेषा निर्धनिनः सदा ॥३११॥

कोवा तृप्तिं समायातो, भोगैर्दुरितबन्धनैः ।
देवो वा देवराजो वा, चक्रांको वा नराधिपः॥३१२॥

आत्मा वै सुमहत्तीर्थं, यदासौ प्रशमे स्थितः ।
अथास्य प्रशमो नास्ति, ततस्तीर्थं निरर्थकम् ॥३१३॥

शीलव्रतजलस्नाने, शुद्धिरस्य शरीरिणः ।
न तत्स्नातस्य तीर्थेषु, सर्वेष्वपि महीतले ॥३१४॥

रागादिवर्जनं स्नानं, ये कुर्वन्ति दयापराः ।
तेषां निर्मलतायोगो, न तु स्नातस्य वारिणा ॥३१५॥

आत्मानं स्नापयेन्नित्यं, ज्ञाननीरेण चारुणा ।
येन निर्मलतां याति, जीवो जन्मान्तरेष्वपि ॥३१६॥

सर्वाशुचिमये काये, शुक्रशोणितसंभवे ।
शुचित्वं येऽभिवाञ्छन्ति, नष्टास्ते जडचेतसः ॥३१७॥

औदारिकशरीरेऽस्मिन्, सप्तधातुमयेऽशुचौ ।
शुचित्वं येऽभिमन्यन्ते, पशवस्ते न मानवाः ॥३१८॥

सत्येन शुध्यते वाणी, मनो ज्ञानेन शुद्धयते ।
गुरुशुश्रूषया कायः, शुद्धिरेषा सनातनी ॥३१९॥
स्वर्गमोक्षोचित्तं नृत्वं, मूढैर्विषयलालसैः ।
कृतं स्वल्पसुखस्यार्थे, तिर्यङ्नरकभाजनम् ॥३२०॥
सामग्रीं प्राप्य संपूर्णां, यो विजेतुं निरुद्यमः ।
विषयारिमहासैन्यं, तस्य जन्म निरर्थकम् ॥३२१॥
निरवद्यं वदेद्वाक्यं, मधुरं हितमर्थवत् ।
प्राणिनां चेतसो ह्लादि, मिथ्यावादिबहिष्कृतम् ॥३२२
प्रियवाक्यप्रदानेन, सर्वे तुष्यन्ति जन्तवः ।
तस्मात्तदेव वक्तव्यं, किं वाक्येऽपि दरिद्रता ॥३२३॥
व्रतं शीलं तपो दानं, संयमोऽर्हत्प्रपूजनम् ।
दुःखविच्छित्तये सर्वं, प्रोक्तमेतन्न संशयः ॥३२४॥
तृणतुल्यं परद्रव्यं, परं च स्वशरीरवत् ।
पररामां समां मातुः, पश्यन् याति परं पदम् ॥३२५॥
सम्यक्त्वसमतायोगो, नैःसंग्यं क्षमता तथा ।
कषायविषयासङ्गः, कर्मनिर्जरणं परम् ॥३२६॥
अयं तु कुलभद्रेण, भवविच्छित्तिकारणम् ।
दब्धो बालस्वभावेन, ग्रन्थः सारसमुच्चयः ॥३२७॥
ये भक्त्या भावयिष्यन्ति, भवकारणनाशनम् ।
तेऽचिरेणैव कालेन, सुखं प्राप्स्यंति शाश्वतम् ॥३२८॥

सारसमुच्चयमेतं, ये पठन्ति समाहिताः ।
ते स्वल्पेनैव कालेन, पदं यास्यन्त्यनामयम् ॥३२९॥
नमः परमसद्ध्यान–विघ्ननाशनहेतवे ।
महाकल्याणसंपत्ति--कारिणेऽरिष्टनेमये ॥३३॥

॥ सारसमुच्चयः समाप्तः ॥

## १८ अध्यात्मबिन्दुप्रथमद्वात्रिंशिका.

ब्रूमः किमध्यात्ममहत्त्वमुच्चै--र्यस्मात्परं स्वं च विभ-
ज्य सम्यक्;
समूलघातं विनिहत्य घाति, नाभेयभूः केवलमास-
साद ॥ १ ॥

लब्धार्यत्वमथ प्रपद्य च गुरोर्नैकट्यमेनःक्षयात् ,
श्रुत्वाध्यात्ममथ प्रपीय च ततस्तत्त्वामृतं यत्पुनः
क्षेत्रज्ञः किल मोमुहीति विषय--ग्रामेषु बद्धस्पृहः
तन्नूनं त्रिजगज्जये धृतिमतो मोहस्य विस्फूर्जितम् २

धत्तेऽम्भोधिर्जवन[1]पवनाच्छोटनोन्मूर्च्छदुद्यो-
ल्लोलश्रेणिचटुलितवपुर्व्याकुलत्वं यथायम्;
निष्कंपोऽपि स्वरसवशतः कर्मकंपाक[2]संगं,
तद्वत् क्षुभ्यत्ययमपि परः पूरुषः संप्रपद्य ॥ ३ ॥

---

१ वेगवान्;    २ पवन

कुम्भोदंचनवर्धमान--करक--स्थाल्याद्यवस्थान्तरा--
पन्येकोऽपि ध्रुवमम्बुयोगवशतो मृद्द्रव्यपिण्डोऽश्नुते;
तद्वत्कर्मजलीययोगमुपलभ्यात्मापि तिर्यङ्नरा--
मर्त्यप्रेतपुरोगजातिनिकरत्वेन स्वयं जायते ॥४॥

भूतार्थो ननु निश्चयः तदितरोऽभूतार्थमावेदयन्,
संत्याज्यो नितरां यतः स्वपरयोर्भेदे स वीजं न हि;
भूतार्थस्तु विशुद्धवस्तुकलना--भिज्ञो ध्रुवं यत्ततो,
भूतार्थं ननु संश्रितो विशदधीः सम्यग्दृगात्मा भवेत् ५

व्यवहरणनयोऽयं पुंस्वरूपं विकारि,
भणति च नवतत्त्वैर्मुद्रितं शुद्धरूपम्;
अबुधजनविवोधा--र्थं किलास्योपदेशो,
जिनसमयविमूढः केवलं यः श्रितोऽमुम् ॥६॥

आत्मास्वरूपं पररूपमुक्तं, अनादिमध्यान्तमकर्त्रभोक्तृ;
चिदंकितं चान्द्रकरावदातं, प्रद्योतयन् शुद्धनयश्च-
कास्ति ॥ ७ ॥

तीर्थप्रवृत्त्यर्थमयं फलेग्रहिस्त्रिकालविद्भिर्व्यवहार उक्तः
परः पुनस्तत्त्वविनिश्चयाय, नयद्वयात्तं[1] हि जिनेन्द्र-
दर्शनम् ॥८॥

ये यावन्तो ध्वस्तबन्धा अभूवन्, भेदज्ञानाभ्यास
एवात्र बीजम्;

---

१ क्रोडीकृतं.

येऽप्यध्वस्तबन्धा भ्रमन्ति, तत्राभेदज्ञानमेवेति विद्म॥९

भेदज्ञानाभ्यासतः शुद्धचेता, नेता नायं नव्यकर्मा-
वलीनाम् ;
(शुद्धं निरुपरागं चित्तं यस्य तादृशो यः सम्यग्दृष्टिः)
लीनां स्वस्मिंस्तामयँस्तां नितान्तं, तां तं स्वीयरूप-
मुज्जीवयेत ॥१॥

अज्ञानतो मुद्रित[1] भेदसंवि-च्छक्तिः किलायं पुरुषः पुराणः
परात्मनोस्तत्त्वमसंविदानः कर्तृत्वमात्मन्यसकृत्प्रयुक्ते
॥११॥

स्वतोऽन्यतो वाप्यधिगत्य तत्त्वं, यद्येष देवः किल
संप्रबुद्धः
द्रव्यं परं नो मम नाहमस्ये--तीयर्ति[2] बुद्धिं यदि
वध्यते किम् ॥१२॥

प्रमाणनिक्षेपनयाः समेऽपि, स्थिताः पदेऽधः किल
वर्त्तमाने;
प्रपश्यतां शांतमनः समूर्ध्वं, पदं न चैषां कतमोऽपि
भाति ॥१३॥

बन्धोदयोदीरणसत्त्वमुख्या, भावाः प्रवन्धः खलु
कर्मणां स्यात् ;
एभ्यः परं यत्तु तदेव धामास्म्यहं परं कर्मकलंकमुक्तम्॥

१ स्थगित, २ अधिगच्छति.

वातोल्लसत्तुङ्गतरङ्गभंगा-द्यथा स्वरूपे जलधिः समास्ते;
तथायमात्माखिलकर्मजन्य--विकारनाशात्स्पृशति
स्वरूपम् ॥१५॥

चैद्रूप्यमेकमपहाय परे किलामी,
यावन्ति एव पुरुषेऽत्र लसन्ति भावाः
तान् संप्रपद्य च परत्वधिया समस्ता-
नास्ते यदास्त्रवति किं ननु कर्म नव्यम् ॥१६॥

शरीरसंसर्गत एव सन्ति,वर्णादयोऽमी निखिलाः पदार्थाः
जांबूनदादेरुपधेरिव द्राग् वैशद्यभाजि स्फटिके तरङ्गाः॥

स्फटिकमणिरिवायं शुद्धरूपश्चिदात्मा,
भजति विविधभावं द्वेषरागाद्युपाधेः
यदपि तदपि रूपं नैव जाहात्ययं स्वं,
न खलु भवति चान्द्री ध्वान्तरूपा मरीचिः ॥१८॥

परं स्वात्मत्वेन स्वमपि च परत्वेन कलयन्,
अयं रागद्वेषाद्यनियतविभावैः परिणतः
ततो रज्ये रुष्याम्यहमिति विकल्पाननुकलं,
प्रकुर्वन् जीवोऽयं ननु जगति कर्माणि कुरुते ॥१९॥

भूताविष्टो नर इह यथा ज्ञानतः स्वं च भूतं,
त्वैकीकुर्वन् भवति विसदृक् चेष्टितानां विधाता;

---

१ प्रतिक्षणम्.

अप्यात्मायं निजपरविवे--कच्युतः कामकोपा--
दीनां कर्त्ता भवति नितरां शुद्धचिद्रूपकाणाम् ॥२॥
व्याप्ये व्यापकभावतः प्रकुरुते जीवः स्वभावान् यथा,
भावाद्वेदकवेद्यतोऽनुभवति स्वांस्तान् स्वभावान् पुनः
तद्वद्वेदयतेऽथवा प्रकुरुते भावान् परांश्चेदयं,
स्यादेवं हि कृतिद्वयस्य करणात्सिद्धान्तवाधस्फुटम् ॥

सर्वे भावा निश्चयेन स्वभावान्,
कुर्वन्तीत्थं साधुसिध्धान्ततत्त्वम्;
भिन्नद्रव्यीभूतकर्मप्रपञ्चं,
जीवः कुर्यात्तत्कथं वस्तुतोऽयम् ॥ २२ ॥

रागो द्वेषो मोह इत्येवमाद्या,
भावा नूनं शुद्धचिद्रूपकाः स्युः
रोधादेषां जायते द्रव्यकर्मा-
भावस्तस्मान्निर्विकारानुभूतिः ॥२३॥

ज्ञानं ज्ञाने भवति न खलु क्रोधमुख्येषु तत्स्यात्,
क्रोधः क्रोधे न हि पुनरयं पूरुषे चित्स्वरूपे;
कर्मद्वन्द्वे न हि भवति चिच्छिन्नकर्मावरुद्धे--
तीत्थं शुद्धग्रहणरसिकः किं विधत्तेऽन्यभावम् ॥२४॥

यदात्मनाऽऽत्माऽऽस्त्रवयोर्विभेदो,
ज्ञातो भवेत् ज्ञानदृशा तदानीं;

निवर्त्ततेऽज्ञानजकर्त्तृकर्म-
प्रवृत्तिरस्मान्निखिलापि मंक्षु[1] ॥२५॥

स्वत्वेन स्वं परमपि पर--त्वेन जानन्समस्तात्,
स द्रव्येभ्यो विरमणमित--श्चिन्मयत्वं प्रपन्नः
स्वात्मन्येवाभिरतिमुपयन्स्वात्मशीली स्वदर्शी-
त्येवं कर्त्ता कथमपि भवेत् कर्मणो नैष जीवः ॥२६॥

व्याप्तं यत्किल वर्त्तीति निखिला-वस्थासु याद्रूप्यतो,
जातु स्यान्न तदात्मताविरहितं तेनाऽस्य साक भवेत्;
तादात्म्यं तदिह स्फुरन्न च भव-न्मुक्तौ नितान्तं ततो,
वर्णादिः सकलो गणो न तु पर-द्रव्यत्वमेव श्रयेत् ॥२७॥

अनवरतमनन्तान्, भावयन् कल्पनौघान्,
कथमिव परतत्त्वा बध्यसे कर्मजालैः
यदि सकलविकल्पातीतमेकं स्वरूप-
मनुभवति ततः किं, संसृतिः किं च बन्धः ॥२८॥

किं मुग्ध! चिन्तयसि कामम[2] सिद्धकल्पान्,
तद्ब्रह्मरूपमनिशं परिभावयस्व;
यल्लाभतोऽस्ति न परः पुनरिष्टलाभो,
यद्दर्शनाच्च न परं पुनरस्ति दृश्यम् ॥२९॥

पंथा विमुक्तेर्भविनां न चान्यो,
यतः परः केवलिभिः प्रदिष्टः

---

१ शीघ्रम्. २ अत्यन्तम्.

आनन्दबोधावपि यद्विहाय,
पदे परस्मिन्न कदापि भातः ॥३०॥
यत्पञ्चेन्द्रियवर्जितं प्रविगलत्-कर्माष्टकं प्रस्खल-
स्वान्तं विग्रहपञ्चकेन वियुतं स्पृष्टं न च प्रत्ययैः
शान्तं शास्वतमक्रियं निरुपधि द्रव्यान्तरासङ्गतं,
विष्वक् प्रोल्लसदर्चिषा परिगतं तत्त्वं तदेवास्म्यहम्॥३१
इत्येवं संप्रधार्य द्रुततरमखिल-भेदसंचिद्वलेन,
जीवाजीवप्रपंचं विदलति किल यो मोहराजानुवृत्तिं;
ज्ञानानन्दस्वरूपे भगवति भजति स्वात्मनि स्थैर्यमाशु,
प्रक्षिप्याज्ञानभावं स भवति अचिरा-च्छुद्ध आत्म-
स्वरूपः ॥३२॥

इति स्वोपज्ञाध्यात्मबिन्दुविवरणे सदुपाध्याय-
श्रीमद्हर्षवर्धनविरचिता प्रथमद्वात्रिंशिका संपूर्णा.

## १९ श्रीमुनिचंद्रसूरिकृता

# मोक्षोपदेशो पंचाशत्.

शुक्लध्यानलवित्रेण, समूलः क्लेशपादपः
विलूनो येन स सदा, जिनो जीयाज्जगत्पतिः ॥१॥

समस्त्यसुखो मोह—मूलो भवविषद्रुमः
विलीनाति चिरालीन—वासनाजललालितः ॥२॥

आधयो विविधावस्था, व्याधयश्चाधमाधमाः
जन्ममृत्युजराश्चास्य, स्वं स्वरूपं जिनैर्मतम् ॥३॥

दुर्भगत्वदरिद्रत्व—विरूपत्वपुरस्सराः
विडम्बनाः फलं प्राहु—र्विडम्बितजगज्जनाः ॥४॥

चतस्रो गतयः शाखा, नानादुःखफलाकुलाः
तासु यद्दुःखमाख्यातं, तदिदानीं निरूप्यते ॥५॥

पञ्चेन्द्रियवधासक्ता, मांसाशनकृतादराः
जायन्ते नरके जीवा, बह्वारम्भपरिग्रहाः ॥६॥

कुम्भीपाकेन पच्यन्ते, पिष्टवन्नष्टचेतनाः
तत्र मुञ्जादिवच्चैते, हन्यन्ते लगुडैर्दृढैः ॥७॥

वज्रयन्त्रेषु पीड्यन्ते, निविडन्ते तिलेक्षुवत्;
भ्रा ष्ट्रभूमिषु भृज्यन्ते, निस्त्राणाश्चणकादिवत् ॥८॥

दारुवद्दारुणाकारै-श्छिद्यन्ते च परश्वधैः
भिद्यन्ते प्रासकुन्ताद्यै-राखेटकमृगादिवत् ॥१०॥

तप्तं त्रपु च पाय्यन्ते, ह्याछोटयन्ते शिलातले;
आकीर्णां कण्टकैस्तीक्ष्णै-रारोप्यन्ते च शाल्मलीम्

काककङ्कश्रृगालाद्यै-र्भक्ष्यन्तेऽत्यन्तनिर्दयैः
तार्यन्ते तरणं रीणा, वैतरिण्याः सुराधमैः ॥११॥

यस्य जिह्वाशतं वक्त्रे, यो जीवेच्छरदां शतम्;
सोऽपि वक्तुं क्षमो न स्या-दशर्म नरकेषु यत् ॥१२॥

कूटमानतुलावन्तो, मिथ्याभाषणतत्पराः
मायाविनो जना यान्ति, तैरश्चं जन्म निश्चितम् ॥१३॥

यादृशं नरके दुःखं, तिर्यक्ष्वपि च तादृशम्;
यतो वाहनदोहाद्या, व्यापदोऽत्र सुदुस्तराः ॥१४॥

क्षुत्तृष्णाबाधिता दीनाः, पारवश्यमुपागताः
वहन्ति पशवो भारं, पृष्टकण्टसमर्पितम् ॥१५॥

केचनोद्वाहदोषेण, दाहदोषेण केचन;
केचिदङ्कुशघातेन, कशाघातेन केचन ॥१६॥

केचिद्वधेन बन्धेन, निरोधेन च केचन;
कर्णपुच्छविच्छेद-नासावेधादिभिस्तथा ॥१७॥

अपारदुःखसम्भार-मध्यमग्ना दिवानिशम्;
साक्षादेवेह दृश्यन्ते, तिर्यञ्चो वञ्चिताः शुभैः ॥१८॥

सामान्यदानदातार-स्तुच्छकोपादिकिल्बिषाः
लभन्ते मानुषं जन्म, जन्मिनो मध्यमैर्गुणैः ॥१९॥
रौद्रदारिद्र्यतस्तत्र, मृतमात्रातिशायिनः
केचित्कथञ्चिज्जीवन्ति, मानवा मानवर्जिताः ॥२०॥
केचिन्निष्ठुरकुष्टेन, सुष्ठु कष्टां दशां गताः
अन्ये ज्वरातिसारादि-रोगोरगविषातुराः ॥२१॥
परकर्मकराः केचि-न्मलिनाननलोचनाः
दृश्यन्ते क्लेशजलधौ, मग्ना नग्ना अनादृताः ॥२२॥
अन्ये स्कन्धसमारूढ-प्रौढभारादृढापदः
जीवन्त्यतिजघन्येन, कर्मणा शर्मणोज्झिताः ॥२३॥
ज्वलज्ज्वलनसम्पर्क-कर्कशैर्विरहानलैः
केचित्तापितसर्वाङ्गा, ग्लायन्ति गलितोद्यमाः॥२४॥
अकामनिर्जरादिभ्यः केचन स्युः सुरा अपि;
कुत्रापि न सुखख्यातिः, काचिदस्ति सतां मता।२५।
वितुद्यमानहृदया, ईर्ष्याशल्यैर्दूरुद्धरैः
विषादवह्नावह्नाय, निपतन्त्येव केचन ॥२६॥
कण्ठलोठितवादित्रा, हठतोऽकुण्ठतोऽपरे;
रङ्गस्थानेऽवतार्यन्ते, दीर्यमाणाङ्गका इव ॥२७॥
स्तम्बेरमतुरङ्गादि—वाहनाकारधारिणः
दयाबाह्यं च वाह्यन्ते, केऽपि सृण्यादिघट्टनैः ॥२८॥

चण्डालाकृतयः केचि—च्चण्डदण्डैर्निपीडिताः
स्वप्नेऽप्यलब्धसञ्चाराः पुरन्दरसभादिषु ॥२९॥

स्वर्गच्युतिं विलीनं च, गर्भजं वाललोलनम्;
पश्यन्तो यन्न भिद्यन्ते, तद्वज्र तनवः सुराः ॥३०॥

यथेह लवणाम्भोभिः पूरितो लवणोदधिः
शारीरमानसैर्दुःखै—रसङ्ख्येयैस्तथा भवः ॥३१॥

केचित् स्वप्नासधनव—न्नतथ्यमिह किञ्चन;
असारं राज्यवाज्यादि, तुषकण्डनवत्तथा ॥३२॥

तडिदाडम्वराकारं, सर्वमत्यन्तमस्थिरम्;
मनोविनोदफलदं, वालधूलीगृहादिवत् ॥३३॥

यश्च कश्चन कस्यापि, जायते सुखविभ्रमः
मधुदिग्धासिधाराग्र—ग्रासवन्नैष सुन्दरः ॥३४॥

अत एव विरज्यन्ते, नीरजोज्ज्वलमानसाः
रोगादिव भुजङ्गाद्वा, संसारावासतोऽमुतः ॥३५॥

यतन्ते च सदानन्द—सुधानीरधयेऽधिकम्;
परमब्रह्म संज्ञाय, पदाय विगतापदे ॥३६॥

स्मरज्वरजरामुख्या, दोषा भवभुवोऽत्र ये;
सर्वथा ते न सन्त्येव, यत्र तत्परमं पदम् ॥३७॥

सर्वकल्याणसंयोगः सर्वमङ्गलसङ्गमः
सर्वोपादेयसीमा च, यतस्तन्मृग्यते वुधैः ॥३८॥

यथाऽमृतरसास्वादी, नान्यत्र रमते जनः
तथा मुक्तिसुखाभिज्ञो, रज्यते न सुखान्तरे ॥३९॥
तीर्णप्रायभवाम्भोधि-र्धूत सम्मोहकश्मलः
कश्चिदेव महाभागो, भवेत्सिद्धिसुखोन्मुखः॥४०॥
चौराकुलपथप्राप्तौ, यादृशो दुर्गसङ्ग्रहः
गम्भीरसलिलेऽम्भोधौ, द्वीपाप्तिरथवा यथा ॥४१॥
मलाशैलगुहायां वा, ज्वलद्रश्मिर्मणिर्यथा
विवेको निर्मलस्तद्वत्, पुण्यभाजां विजृम्भते ॥४२॥
क्रियाभिर्ज्ञानमूलाभि-र्मोक्षोऽक्षेपेण सिध्यति;
ताः पुनर्दैवतापूजा, गुरुसेवादयो मताः ॥४३॥
विशुद्धकेवलालोक-विलोकितजगत्त्रयः
प्रातिहार्यमहापूजा-जनितासमविस्मयः ॥४४॥
समस्तजगतामेकं, मौलिमाणिक्यमुज्ज्वलम्;
अर्हन्नेव सतां देवो, देवतागुणभूषितः ॥४५॥
गुरुर्गृहीतशास्त्रार्थः परां निस्सङ्गतां गतः
मार्त्तण्डमण्डलसमो, भव्याम्भोजविकासने ॥४६॥
गुणानां पालनं चैव, तथा वृद्धिश्च जायते;
यस्मात् सदैव स गुरु-र्भवकान्तारतायकः ॥४७॥
स पुंमर्जायते ताव-दाचारात्सज्जनश्रुतेः
आत्मबोधविशेषाच्च, पुण्याच्चेत्याह सर्ववित् ॥४८॥

अक्षुद्रता दया दाक्ष्यं, क्षमा चाक्षविनिग्रहः
न्यायानुवृत्तिरनघा, यत्नश्च श्रुतशीलयोः ॥४९॥
समानधर्मवात्सल्यं, यतिधर्मादरः परः
इत्यादिकुशलारम्भो, मुक्तिमार्गतया मतः ॥५०॥
मोक्षोपदेशपञ्चाश–देषा भाव्या मुमुक्षुभिः
स्यान्मुनीन्द्रमुनीशेष्टं, येन मुक्तौ स्थिरं मनः॥५१॥

इति श्रीमुनिचंद्रसूरिकृता मोक्षोपदेश-
पंचाशत् समाप्ता.

# २० श्री सम्यक्त्व–स्वरुप–स्तव.

जह सम्मत्तसरूवं, परूविअं वीरजिणवरिंदेण;
तह कित्तणेण तमहं, थुणामि सम्मत्तसुद्धिकये १

सामि ! अणाइअणंते, चउगइसंसारघोरकांतारे;
मोहाइ कम्मगुरुठिइ–विवागवसओ भमइ जीवो. २

पल्लोवलमाइअहा–पवत्तिकरणेण कोवि जइ कुणइ;
पलिआ असंखभागुण–कोडिकोडिअयरठिइ सेसं. ३

तत्थवि गंठी घणराग–दोसपरिणइमयं अभिदंतो;
गंठीय जीवोवि हहा, न लहइ तुह दंसणं नाह ! ४

पहिलिय पविलियनाएण, कोवि पज्जत्तसन्नीपंचिंदी;
भव्वो अवड्ढपुग्गल–परियट्टवसेससंसारो. ५

अपुव्वकरणमुग्गर–घायविहियदुट्ठगंठीभेओ सो;
अंतमुहुत्तेण गओ, नियट्टीकरणेवि सुज्जंतो. ६

सो तत्थ रणे सुहडोव, वयरीजयजणियपरमआनंदं;
सम्मत्तं लहइ जीवो, सामन्नेणं तुह पसाया. ७

तं चेगविहं दुविहं, तिविहं तह चउविहं च पंचविह;
तत्थेगविहं जंतुह, पणीयभावे सुतत्तरुइ. ८

दुविहं तु दव्वभावा, निच्छयववहारओवि अहवावि
निस्सग्गुवएसाओ, तुह वयणविऊहिं निद्दिट्ठं. ९

तुह वयणे तत्तरुइ, परमत्थमजाणओवि दव्वगयं;
सम्मं भावगयं पुण, परमत्थवियाणओ होइ. १०
निच्छयओ सम्मत्तं, नाणाइमयप्पसुहपरिणामो;
इयरं पुण तुह समये, भणियं सम्मत्तहेऊहिं. ११
जल-वत्थ-मग्ग-कुद्दव-जराइनायेण जेण पन्नत्तं;
निस्सग्गुवएसभवं, सम्मत्तं तस्स तुब्भ नमो. १२
तिविहं कारग-रोअग-दीवगभेएहिं तुह मयविऊहिं;
खाओवसमोवसमिय–क्खाइयभेएहि वा कहियं. १३
जं जह भणियं तुमए, तं तह करणंमि कारगो होइ;
रोअग-सम्मत्तं पुण, रुइमित्तकरं तु तुह धम्मे. १४
सयमिह मिच्छदिट्ठी, धम्मकहाईहिं दीवइ परस्स;
दीवग–सम्मत्तमिणं, भणंति तुह संमयमइणो. १५
अपुव्वकयत्तिपुंजो, मिच्छमुइन्नं खवित्तु अणुइन्नं;
उवसामिय अनियट्टी–करणाओ परं खओवसमी. १६
अकयतिपुंजो ऊसर-दव-इलिय-दड्ढ-रुक्खनाएण;
अंतरकरणुवसमिओ, उवसमिओ वा ससेणिगओ. १७
मिच्छाइखए खइओ, सो सत्तगि खीणि ठाइ बद्धाऊ;
चउतिभवभाविमुक्खो, तब्भवसिद्धिवि इयरो वा. १८
चउहा उ सासाणं, गुडाइवमणुव्व मालपडणुव्व;
उवसमिओ उ पडंतो, सासाणो मिच्छमप्पत्तो. १९

वेअगजुअ पंचविहं, तं च तु दुपुंजखयंमि तइयस्स;
खयकालचरमसमये, सुद्धाणुवेयगो होइ. २०

अंतमुहुत्तो-वसमो, छावलिय सासण वेयगो समओ;
साहियतित्तीसायर, खइओ दुगुणो खओवसमो. २१

उक्कोसं सासायण, उवसमिया हुंति पंचवाराओ;
वेयग खयग इकंसी, असंखवारा खओवसमो. २२

बीयगुणे सासाणो, तुरियाइसु अह्निगार-चउ-चउसु;
उवसमग-खइग-वेयग—खाओवसमा कमा हुंति. २३

तिस्सुद्धि-लिंग लक्खण-दूसण-भूसण-पभावगागारा;
सद्दहण जयण भावण ठाण विणय गुरु गुणाइयं.२४

वित्थारं तुह समया, सया सरंताण भवजीवाणं;
सामिय तुह प्पसाया, हवेऊ सम्मत्तसंपत्ति. २५



# २१ आठ दृष्टिनी सज्झाय.

## ढाळ १ ली.

चतुर सनेही मोहना—ए देशी.

शिवसुखकारण उपदिशी, योगतणी अड दिट्ठी रे;
ते गुण थुणी जिनवीरनो, करशुं धर्मनी पुट्ठी रे—
वीर जिनेसर देशना. १
सघन अघन दिनरयणीमां, बाल विकल ने अनेरा रे;
अर्थ जुए जेम जूजुआ, तेम ओघनजरना फेरा रे—वी. २
दर्शन जे थयां जूजुआं, ते ओघनजरने फेरे रे;
भेद थिरादिकदृष्टिमां, समकितदृष्टिने हेरे रे— वी. ३
दर्शन सकलना नय ग्रहे, आप रहे निज भावे रे;
हितकरी जनने संजीवनी, चारो तेह चरावे रे— वी. ४
दृष्टि थिरादिक चारमां, मुगतिप्रयाण न भाजे रे;
रयणीशयन जेम श्रम हरे, सुरनर सुख तेम छाजे रे—वी. ५
एह प्रसंगथी में कह्यु, प्रथम दृष्टि हवे कहीए रे;
जिहां मित्रा तिहां बोध जे, ते तृणअगनिसो लहीए
रे—वी. ६
व्रत पण इहां यम संपजे, खेद नहि शुभ काजे रे;
द्वेष नहि वळी अवरशुं, एह गुण अंग विराजे रे—वी. ७
योगनां बीज इहां ग्रहे, जिनवर शुद्ध प्रणामो रे;
भावाचारजसेवना, भवउद्वेग सुठामो रे— वी. ८

द्रव्यअभिग्रह पाळवा, ओषधप्रमुखने दाने रे;
आदर आगमआसरी, लिखनादिक बहु माने रे–वी. ९
लेखन पूजन आपवुं, श्रुतवाचनाउद्ग्राहो रे;
भावविस्तार सज्झायथी, चिंतन भावन चाहो रे–वी. १०
वीजकथा भली सांभळी, रोमांचित हुवे देहे रे;
एह अवंचक योगथी, लहीए धरमसनेह रे– वी. ११
सद्गुरुयोगे वंदनक्रिया, तेहथी फळ होय जेहो रे;
योग क्रिया फळ भेदथी, त्रिविध अवंचक एहो रे–वी. १२
चाहे चकोर ते चंदने, मधुकर मालतीभोगी रे;
तेम भवि सहज गुणे होये, उत्तम निमित्त संयोगी रे-वी.१३
एह अवंचक योग ते, प्रगटे चरमावर्त्ते रे;
साधुने सिद्धदशासमुं, वीजनुं चित्त प्रवर्त्ते रे–वी. १४
करण अपूर्वना निकटथी, जे पहेलुं गुणठाणुं रे;
मुख्यपणे ते इहां होये, सुयश विलासनुं टाणुं रे–वी. १५

ढाळ २ जी.

दर्शन तारादृष्टिमां मनमोहन मेरे, गोमयअग्निसमान म.
शौच संतोष ने तप भलुं म०, सज्झाय ईश्वरध्यान म. १
नियम पंच इहां संपजे म०, नहि किरियाउद्वेग म.
जिज्ञासा गुणतत्त्वनी म०, पण नहि निज हठ टेग म. २
एह दृष्टि होय वरततां म०, योगकथा बहु प्रेम म.
अनुचित तेह न आचरे म०, वाळ्यो वळे जेम हेम म. ३

विनय अधिक गुणीनो करे म०, देखे निज गुण हाण म.
त्रास धरे भवभयथकी म०, भव माने दुःखखाण म. ४
शास्त्र घणां मति थोडली म०, शिष्ट कहे ते प्रमाण म.
सुयश लहे ए भावथी म०, न करे जूठ डफाण म. ५

## ढाळ ३ जी.

प्रथम गोवाळतणे भवेजी—ए देशी.

त्रीजी दृष्टि वला कहीजी, काष्ठ अग्नि सम बोध;
क्षेप नहि आसन सधेजी, श्रवण समीहा सोध रे—
जिनजी, धन धन तुज उपदेश. १
तरुण सुखी स्त्रीपरिवर्योजी, जेम चाहे सुरगीत;
सांभळवा तेम तत्त्वनेजी, ए दृष्टि सुविनीत रे जि. ध. २
सरी ए बोधप्रवाहनीजी, ए विण श्रुत थलकूप;
श्रवणसमीहा ते किसीजी, शयित सुणे जेम भूप रे-जि. ध. ३
मन रीझे तन उल्लसेजी, रीझे बुझे एकतान;
ते इच्छाविण गुणकथाजी, बहेरा आगळ गान रे-जि. ध. ४
विघन इहां प्राये नहिजी, धर्महेतुमां कोय;
अनाचारपरिहारथीजी, सुयश महोदय होय रे-जि. ध. ५

## ढाळ ४ थी.

झांझरिया मुनिवर, धन धन तुम अवतार—ए देशी.

योगदृष्टि चोथी कहीजी, दीसा तिहां न उत्थान;
प्राणायाम ते भावथीजी, दीप प्रभा सम ज्ञान—

मनमोहन जिनजी, मीठी ताहरी वाण. १

बाह्यभाव रेचक इहांजी, पूरक अंतरभाव;
कुंभक थिरता गुणे करीजी, प्राणायाम स्वभाव–म. २
धर्मअर्थे इहां प्राणनेजी, छांडे पण नहि धर्म;
प्राणअर्थें संकट पडेजी, जुओ ए दृष्टिनो मर्म–म. ३
तत्त्वश्रवण–मधुरोदकेजी, इहां होये बीजप्ररोह;
खारउदकसम भव त्यजेजी, गुरुभगति अद्रोह–मन.४
सूक्ष्मबोध तो पण इहांजी, समकितविण नवि होय;
वेद्य संवेद्य पदे कह्योजी, ते न अवेद्ये जोय–मन. ५
वेद्यबंध शिवहेतु छेजी, संवेदन तस नाण;
नय निक्षेपे अति भलुंजी, वेद्य संवेद्य प्रमाण–मन.६
ते पद ग्रंथिविभेदथीजी, छेली पापप्रवृत्ति;
तप्त लोह पद धृति समीजी, तिहां होय अंत निवृत्ति–म०
एहथकी विपरीत छेजी, पद ते अवेद्य संवेद्य;
भवाभिनंदी जीवनेजी, ते होय व्रजअभेद्य–मन. ८
लोभी कृपण दयामणोजी, मायी मच्छरठाण;
भवाभिनंदी भयभर्योजी, अफल आरंभअयाण–मन.९
एवा अवगुणवंतनुंजी, पद छे अवेद्य कठोर;
साधुसंग आगमतणोजी, ते जीत्यो धुरंधोर–मन०१०
ते जीते सहेजे टळेजी, विषम कुतर्कप्रकार;
दूर निकट हाथी हणेजी, जेम बे बठर विचार–मन.११

हुं पाम्यो संशय नहिजी, मूरख करे ए विचार;
आळसु आ गुरु शिष्यनोजी, ते तो वचनप्रकार—मन.
धीजे ते पती आववुंजी, आपसते अनुमान;
आगमने अनुमानथीजी, साचुं लहे सुज्ञान—मन. १३
नहि सर्वज्ञ जुजूआजी, तेहना जे वळी दास;
भक्ति देवनी पण कहीजी, चित्र अचित्र प्रकाश—म॰
देव संसारी अनेक छेजी, तेहनी भक्ति विचित्र;
एक राग पर द्वेषथीजी, एक मुगतिनी अचित्र—मन॰
इंद्रियार्थगत वुद्धि छेजी, ज्ञान छे आगमहेत;
असंमोह शुभ कृतिगुणेजी, तेणे फलभेदसंकेत—मन॰
आदर किरिया रति घणीजी, विघन टळे मिले लच्छी;
जिज्ञासा वुद्धसेवनाजी, शुभ कृति चिन्ह प्रत्यच्छी—म॰
वुद्धिक्रिया भवफळ दियेजी, ज्ञानक्रिया शिवअंग;
असंमोहकिरिया दियेजी, शीघ्र मुगतिफळ चंग—म॰
पुद्गलरचना कारमीजी, तिहां जस चित्त न लीन;
एक मार्ग ते शिवतणोजी, भेद लहे जग दीन—म.१९
शिष्यभणी जिनदेशनाजी, कहे जन परिणति भिन्न;
कहे मुनिनी नयदेशनाजी, परमारथथी अभिन्न—मन.
शव्दभेद झगडो किस्योजी ? परमारथ जो एक;
कहो गंगा कहो सुरनदीजी, वस्तु फरे नहि छेक—मन.

धर्म क्षमादिक पण मटेजी, प्रगटे धर्मसंन्यास;
तो झगडा झांटा तणोजी,मुनिने कवण अभ्यास?–म०
अभिनिवेश सघळो तजीजी, चार लही जेणे दृष्टि;
ते लेशे हवे पंचमीजी, सुयशअमृतघनवृष्टि–मन० २३

ढाळ ५ मी.

धन धन संप्रति साचो राजा—ए देशी.

दृष्टिथिरामांहे दर्शन नित्ये, रत्नप्रभासम जाणो रे;
भ्रांति नहि वळी बोध ते सूक्ष्म,प्रत्याहार वखाणोरे-१
ए गुण वीरतणो न विसारुं, संभारुं दिन रात रे;
पशु टाळी सुररुप करे जे,समकितने अवदातरे-ए गुण०
बालधूलि-घरलीला सरखी, भवचेष्टा इहां भासे रे;
ऋद्धि सिद्धि साव घटमां प्रगटे,
अष्ट महा सिद्धि पासे रे-ए गुण० ३
विषयविकारे न इंद्रिय जोडे, ते इहां प्रत्याहारोरे;
केवळ ज्योति ते तत्त्व प्रकाशे,
शेष उपाय असारोरे-ए गुण० ४
शीतल चंदनथी पण उपन्यो, अग्नि दहे जेम वननेरे;
धर्मजनित पण भोग इहां तेम,
लागे अनिष्ट ते मननेरे-ए गुण० ५

अंशे होय इहां अविनाशी, पुद्गलजालतमासीरे;
चिदानंदघन--सुयशविलासी,
केम होय जगनो आशीरे ?-ए गुण० ६

ढाळ ६ ठ्ठी.

भोलिडा हंसा रे विषय न राचीए-ए देशी.

अचपळ रोगरहित निठुर नहि, अल्प होय दोय नीति;
गंध ते सारो रे कान्ति प्रसन्नता, सुस्वर प्रथम प्रवृत्ति-
धन धन शासन श्रीजिनवरतणुं. १
धीरप्रभावी रे आगले योगथी, मित्रादिकयुत चित्त;
लाभ इष्टनो रे द्वंद्वअधृष्यता,
जनप्रियता होय नित्य--धन० २
नाश दोषनो रे तृपति परम लहे, समता उचित संयोग;
नाश वयरनो रे बुद्धि ऋतंभरा,
ए निष्पन्नह योग--धन० ३
चिन्ह योगनां रे जे पर ग्रंथमां, योगाचारयदिट्ट;
पंचम दृष्टिथकी ते जोडीए,
एहवा तेह गरिट्ट—धन० ४
छट्ठी दिट्ठी रे हवे कांता कहुं, तिहां ताराभप्रकाश;
तत्त्वमिमांसा रे दृढ होय धारणा,
नहि अन्य श्रुत वास—धन० ५

मन महिलानुं रे व्हाला उपरे, वीजां काम करंत;
तेम श्रुतधर्मे रे एहमां मन धरे,
ज्ञानाक्षेपकवंत—धन० ६
एहवे ज्ञाने रे विघननिवारणा, भोग नहि भवहेत;
नवि गुण दोष न विषयस्वरुपथी, मन गुण अवगुण खेत.
मायापाणी रे जाणी तेहने, लंघी जाय अडोल;
साचुं जाणी रे ते बीतो रहे, न चले डामाडोल-धन० ८
भोग तत्त्वने रे एम भय नवि टळे, जूठा जाणे रे भोग;
ते ए दृष्टिरे भवसायर तरे, लहे वळी सुयशसंयोग-धन० ९

## ढाळ ७ मी.

### ए छींडी किहां राखी--ए देशी.

अर्कप्रभासमबोध प्रभामां, ध्यानप्रिया ए दिट्ठी;
तत्त्वतणी प्रतिपत्ति इहां वळी, रोग नहि सुखपुट्ठी रे-
भविका, वीरवचन चित्त धरीए. १
सघळुं परवश ते दुःखलक्षण, निजवश ते सुख लहीए;
ए दृष्टे आतमगुण प्रगटे, कहो सुख ते
कुण कहीएरे?- भविका० २
नागरसुख पामर नव जाणे, वल्लभसुख न कुमारी;
अनुभववण तेम ध्यानतणुं सुख, कोण जाणे
नरनारी रे?--भविका० ३

अेह दृष्टिमां निर्मळ बोधे, ध्यान सदा होय साचुं;
दूषणरहित निरंतर ज्योति, रतन ते दीपे जाचुंरे-
भविका० ४
विषभागक्षय शांतवाहिता, शिवमारग ध्रुव नाम;
कहे असंगक्रिया इहां योगी, विमल सुयश परि-
णाम रे-भविका० ५

## ढाळ ८ मी.

तुज साथे नहि बोलुं मारा व्हाला—ए देशी.

दृष्टि आठमी सार समाधि,
नाम परा तस जाणुंजी,
आपस्वभावे प्रवृत्ति पुरण,
शशि सम बोध वखाणुंजी;
निरतिचारपद एहमां योगी,
कहीए नहि अतिचारीजी,
आरोहे आरुढे गिरिने,
तेम एहनी गति न्यारीजी. १
चंदन गंध समान क्षमा इहां,
वासकने न गवेषेजी,
आसंगे वर्जित वळी एहमां,
किरिया निज गुण लेखेजी;

शिक्षाथी जेम रतननियोजन,
दृष्टिभिन्न तिम एहोजी,
तास नियोगे करण अपूरव,
लहे मुनि केवलगेहोजी. २

क्षीणदोष सर्वज्ञ महामुनि,
सर्व लब्धि फल भोगीजी,
परउपगार करी शिवसुख ते,
पामे योग अयोगीजी;
सर्वशत्रुक्षय सर्वव्याधिलय,
पुरण सर्व समीहाजी;
सर्व अरथ योगे सुख तेहथी,
अनंतगुण निरीहाजी. ३

अे अड दिट्ठी कही संक्षेपे,
योगशास्त्रसंकेतेजी,
कुलयोगी ने प्रवृत्तचक्र जे,
तेहतणे हितहेतेजी;
योगीकुले जाया तस धर्मे,
अनुगत ते कूलयोगीजी,
अद्वेषी गुरु देव द्विज प्रिय,
दयावंत उपयोगीजी. ४

सुश्रूषादिक अड गुण संपुरण,
प्रवृत्तचक्र ते कहीअेजी;
यमद्वयलाभी परदुगअर्थी,
आद्य अवंचक लहीएजी;
चार अहिंसादिकयम इच्छा,
प्रवृत्ति थिर सिद्धि नामेजी;
शुद्ध रुचे पाळे अतिचारह,
टाळे फळपरिणामेजी. ५

कुलयोगी ने प्रवृत्तचक्रने,
श्रवण शुद्धि पक्षपातजी;
योगदृष्टिग्रन्थे हित होवे,
तेणे कही अे वातजी;
शुद्ध भाव ने सूनी किरिया,
वेहुमां अंतर केतोजी;
जलहलतो सुरज ने खजुओ,
तास तेजमां तेतोजी. ६

गुह्यभाव अे तेहने कहीअे,
जेहसुं अंतर भांजेजी,
जेहसुं चित्त पटंतर होवे,
तेहसुं गुह्य न छाजेजी;

योग्य अयोग्य विभाग अलहतो,
करशे मोटी वातोजी;
खमशे ते पंडितपरखद्‌मां,
मुष्टिप्रहार ने लातोजी. ७
सभा त्रण श्रोता गुण अवगुण,
नंदीसूत्रे दीसेजी,
ते जाणी अे ग्रंथ योग्यने,
देजो सुगुण जगोशेजी;
लोक पूरजो निज निज इच्छा,
योग भाव गुण रयणेजी,
श्री नयविजय विबुध पय सेवक-
वाचक यशने वयणेजी. ८

**समाप्तोऽय-मात्महितकरो ग्रंथः**

# पुस्तक वांचनार प्रेमीने ध्यानमां राखवा लायक अगत्यनी सूचनाओ.

१ पुस्तकने थूंक लगाडवुं नहि.

२ पुस्तकने अशुद्ध वांचवुं नहि.

३ पुस्तकने पासे राखी वाछूट करवी नहि.

४ पुस्तकने पग लगाडवो नहि.

५ पुस्तकने पटकवुं नहि.

६ पुस्तकने पासे राखी भोजन करवुं नहि.

७ पुस्तकने पासे राखी झाडो करवो नहि.

८ पुस्तकने पासे राखी पेशाव करवो नहि.

९ पुस्तकनो अक्षर थूंकथी भूसवो नहि.

१० पुस्तक उपर बेसवुं के सूवुं नहि.

११ पुस्तकनो अग्निथी नाश करवो नहि.

१२ पुस्तकनो पाणीथी नाश करवो नहि.

१३ पुस्तकनो फाडीने के बीजा कोइ पण प्रकारे नाश करवो नहि.

